॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## दशमो गुच्छकः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।

स च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९४



मूल्यं सार्धो रूप्यकाः ।

## अनुक्रमणिका ।

# रामभद्रदीक्षितः,

## तत्समकालीना द्रविडदेशीया अन्यकवयश्च ।

श्रीरामभद्रमखीन्द्रोऽयं बह्वृचो नल्लादीक्षितस्य पौत्रो यज्ञरामदीक्षितपुत्रः कौण्डिन्यान्वयज आश्वलायनसूत्री च. अयं चोलेषु कुम्भघोणनगरस्य सप्तक्रोशदूरवर्तिनि कण्डरमाणिक्याख्येऽग्रहारे चतुर्वेदयज्वनो वंशे समुत्पन्नः. द्राविडी (Tamil) चास्य जन्मभाषा. श्वशुरोऽस्य द्वादशाहादियज्वनो नारायणस्य पुत्रः शब्दकौमुदी-धातुरत्नावल्यादीनां कर्ता श्रीमच्चोक्कनाथमखीन्द्रः. तथा च धातुरत्नावल्यां कविरुपक्रमते—

'शिवं गणपतिं चाम्बां द्वादशाहादियाजिनम् ।
तातं नारायणं नत्वा धातुपाठं समारभे ॥
शतैश्चतुर्भिः पद्यानां त्रिंशैरार्षक्रमान्विता ।
धातुरत्नावलिरियं क्रियते कृतिनां मुदे ॥' इति.

अनन्तरमुपसंहरति च—

'इति संचारिभाष्यश्रीद्वादशाहादियाजिनः ।
पुत्रेण चोक्कनाथेनादादिः पद्यैरलंकृतः ॥
धातुरत्नावलिरियं चोक्कनाथविपश्चिता ।
रचिता धार्यते येन स सर्वत्र विजेजिते ॥' इति.

श्रीरामभद्रमखीन्द्रोऽपि स्वकीयपरिभाषावृत्तिव्याख्यानोपक्रमे—

'अप्रत्युपक्रियसमस्तपदप्रबोधविश्राणनोपकृतिनिस्तुलितानुकम्पम् ।
शेषं द्वितीयमिव शाब्दिकसार्वभौमं श्रीचोक्कनाथमखिनं गुरुमानतोऽस्मि ॥' इति,

षड्दर्शनीसिद्धान्तसंग्रहे संग्रहेण व्याकरणमतप्रकटनानन्तरं

'फणिग्रामणिवाग्गुम्फप्राणनाडयदुक्तये ।
कलये शब्दकौमुद्याः कवये गुरवे नमः ॥' इति च

स्वगुरुं स्मरति. यद्यपि लभ्यत इदानीं शब्दकौमुदी नान्तमद्य सौलभ्येन लभ्यते.

श्रीरामभद्रमखीन्द्रस्य विद्यागुरुः श्वशुरश्चायं दीक्षितमणिश्चोक्कनाथः कण्डरमाणिक्याग्रहारमेव स्वनिवासभूमितयाङ्गीकृत्य तममण्डयदिति श्रूयते.

कान्तिमतीपरिणयाख्यनाटकस्य रसविलासाख्यभाणस्य च कवयिता चोक्कनाथसुधीरस्मादन्योऽर्वाकालिकश्च. स शहजिमहाराजपुरवास्तव्यस्य तद्ग्रामप्रतिग्रहीतृष्वप्येकतमस्य तिप्पाध्वरिणः पञ्चमः पुत्रः, तद्ग्रामप्रतिगृहीतृष्वेकतमस्य कुप्पाध्वरिणः कनिष्ठभ्राता च. तस्य माता नरसाम्बा नाम्नी. आन्ध्री च तस्य जन्मभाषा. नामापि तस्य मातुस्तमान्ध्रब्राह्मणमावेदयति, तज्जातीयेष्वेव हि दक्षिणदेशेषु स्त्रीणां तन्नाम्नो दर्शनात्. सर्वमिदं बहुशस्तदीयकान्तिमतीपरिणयनाटकादेव विशदीभवति. तथा हि कान्तिमतीपरिणयनाटके—

'नेता शाहमहीन्द्रो नाटकमतिचित्रसंविधानमिदम् ।
एषा सभा रसज्ञा कविरपि चास्यैष चोक्कनाथसुधीः ॥ × × ।

**पारिपार्श्वकः**—जानाम्येतं रसविलासाख्यभाणस्य कर्तयितेति । × × ।

**सूत्रधारः**—

सकलकलास्वपि निपुणो नरसाम्बाविमलगर्भसंभूतः ।
तिप्पाध्वरीन्द्रतनयः शाहमहाराजपुरकृतावासः ॥ × × ।

**पारिपार्श्वकः**—तर्हि सकलकलावल्लभस्य कुप्पाध्वरिणो वादकेसरिणस्तिरुमलशास्त्रिणश्च कनीयानिति वक्तव्यम् ।

**सूत्रधारः**—शैशवाभ्यस्तसकलशास्त्रयोः स्वामिशास्त्रि-सीतारामशास्त्रिणोरपि ।' इति. श्रीरामभद्रमखीन्द्रः कौण्डिन्यगोत्रोद्भव इति सुप्रसिद्धम्. स्पष्टीभवति च नृसिंहरायमखिनस्त्र्यम्बकरायमखिनश्च कनीयसो भ्रातुर्भगवन्तरायस्य कृतौ राघवाभ्युदयनाटके सूत्रधारवाक्ये । यथा—

'तदेतत्प्रत्यग्रपतञ्जलिना द्वितीयप्राचेतसेन कुण्डिनकुलमण्डनेन रामभद्राध्वरीन्द्रेण विमृश्य सशिरःश्लाघमनुमोदितमिति । तथा चोक्तं तेनैव—

मिलदलिकुलभालीधूतमल्लीमतल्ली-
गलितनवमधूलीधूलिकेलीसखीभिः ।
भणितिभिरनघाभिर्भारतीकर्णपूरं
श्लथयति भगवन्तस्त्र्यम्बकार्यानुजन्मा ॥' इति.

अन्यच्च, शहजिराजपुरापरनामधेयस्य तिरुवशलूराख्यग्रामस्य शहजिमहाराजकृते दानशासनपत्रे—'नल्लादीक्षितपौत्राय यज्ञरामदीक्षितपुत्राय श्रीरामभद्रमखीन्द्राय कौण्डिन्यगोत्रोद्भवायाश्वलायनसूत्रिणे ऋक्शाखाध्यायिने चत्वारि क्षेत्राणि प्रदत्तानि' इति स्फुटं महाराष्ट्रीभाषायां लिखितमस्ति.

यद्यपि जन्मक्षेत्रं कवेरस्य श्रीरामभद्रमखीन्द्रस्य कण्डरमाणिक्याग्रहार एवासीत्, तथापि पश्चादसौ शहजिमहाराजपुराभिधेऽग्रहारे स्थिरमुवासेत्यपि सप्रमाणम्. यतस्तेनैव कविना कृते परिभाषावृत्तिव्याख्यान एवं संदृश्यते—

---

१. रामभद्रदीक्षितस्य निवासभूमेः शहजिराजपुरस्य वर्णनं भूमिनाथकविकृते धर्मविजये कृतम्. यथा—

'असौ धर्मपुरुषः परिक्रम्य क्रमेण निषेवितनिखिलपुण्यक्षेत्रो विलोचनरसायनीकृताभिरूपतराग्रहारपरम्परः कुतूहलेन चोलमहीमहनीयभूषणायमानं शहराजपुरमुपगम्य सम्यगानन्दादन्तरेवमचिन्तयत्—

मन्दस्पन्दिदलोल्लसत्फलभरव्यानम्ररम्भावनी-
खेलद्बालशुकानुकारितबुधव्याख्यानवाक्यक्रमः ।

'सतां तेनार्पिते राज्ञा शहराजपुराभिधे ।
अग्रहारे स्थितिमता रामभद्रेण यज्वना ॥

---

एषोऽशेषमिदं निरस्य सहसा मद्दैन्यमन्यादृशं
हन्तानन्दभरं तनोति विबुधग्रामोऽभिरामो हृदि ॥

विद्वत्सहस्रपरिघुष्टसमस्तविद्याघोषेण भित्तिषु दिशां मुखरीकृतेन ।
एकेन्द्रनन्दनयशोजयडिण्डिमाख्या व्याख्यायते हि मुहुरत्र महाग्रहारे ॥

अयमखिललोकप्रशंसाप्रथमपदमग्रहारः स्वयमुचितज्ञशेखरेण शाहमहीन्द्रेण नानादिगन्तरतः क्रमेण सप्रयत्नसमुपानीतैरुज्ज्वलतरतेजःशालिभिस्त्रासलेशरहितैः सुवृत्तैरत्यर्घपात्रभूतैः सकलदर्शनाभिनन्दनीयैर्विद्वन्मणिभिरभिगुम्भितश्चोलभूपरिष्कारो हारः । × × × × × । अत्र खलु विचित्रचरित्रपवित्रीकृतधरित्रीलोकाः सकलविद्यास्वनवद्यवैशद्यहृद्या मतिमन्तमन्तेवासिनमध्यापयन्तो निश्चलवृत्तयो विपश्चितः परिष्कुर्वते सर्वतो बहिर्वेदीम् ।

स किल जगति शेषः ख्यातमेधाविशेषः पटुवदनसहस्रेणैव यं व्याचकार ।
विशदयति मुखेनैकेन सर्वं तमर्थं करबदरमिवासौ देशिकः शाब्दिकानाम् ॥
चिन्तामणिप्रभृतिभूरिगभीरभावग्रन्थान्तरस्थघनवाक्यशिलाविभेदान् ।
वाक्चन्द्रिकाविसरणैः सरसीकरोति नैयायिकेन्दुरिह सैष जगत्प्रकाशः ॥
श्रुतिवचनगोचराभिर्वाग्धाटीभिर्निरर्गलाभिरसौ ।
मीमांसतेऽध्वरमहो जैमिनिरिव मूर्तिमानहो धर्मान् ॥
वेदान्तविन्ध्यविपिनैर्दुरासदैर्मन्दवैभवैरितरैः ।
विहरति विद्वत्सिंहस्तदीयवृत्तेर्निदानमित एषः ॥

अधुना किल नानादिगन्तवास्तव्यागन्तुकपण्डितजनशिरःकम्पाभिनन्द्यमानकर्कशमहाग्रन्थमर्मभेदनालंकर्मीणविबुधकुञ्जरसमञ्चितः शिष्यजनप्रतिज्ञाप्रक्रान्तवक्रेतरवादाटोपविकटभ्रुकुटीविलोकनविस्मेरोदारतरुणीविवलितमुखचन्द्रमञ्जुलरुचिपुञ्जरञ्जितवीथ्यन्तरो व्यवहारपरिच्छेदनेच्छासमागतजानपदजनविवादानुयोगचटुलकक्षपुटन्यस्तपुस्तकमाणवकविराजितच्छात्रजनविजृम्भितमान्यतरोपन्यासविलेखनकृतोद्योगसमागतवैदेशिकग्रन्थकृत्सूरिनिविरीसो महाकविवितीर्णभोसलवंशावतंसयशःप्रशस्तिसमस्यापूरणाहमहमिकाप्रवृत्तसत्वरनानाविधोल्लेखसमाहितच्छात्रजनपरिस्तिमितमुखावलोकनानन्दमन्थरान्तरविद्वद्वृन्दः कदलीपट्टमिथ्यापुस्तकहस्तनाटितशिष्यभावसवयःपरिवृतव्याख्यातृताभिनयकमनीयानुपनीतचतुरबालकविलसितविद्वद्गृहबहिर्वेदिकाकोणः कोशगृहं सारस्वतसर्वस्वस्य जन्मभूमिः श्रौतस्मार्तकर्माचरणस्य समुच्चाटनमन्त्रः कलिमहाग्रहस्य कीर्तिपताका शाहसार्वभौमस्य

---

१. २. शहजिराजपुरमिति खेटकस्य नाम, न तु नगरस्येति चाभ्यां श्लोकाभ्यां स्फुटम्.

पाणिनेः परिभाषाणां वृत्तिर्व्याख्यायतेऽधुना ।

इदं शृण्वन्तु करुणां विधायास्मिन्विपश्चितः ॥' इति.

डॉक्टर् बर्नेल्नामा हूणसूरिः शहजिराजपुरमिति तञ्जपुरस्य नामान्तरं स्यादिति मन्यते. तेन तिरुवशलूराख्यग्रामस्यैव शहजिराजपुरमित्यपि नामान्तरमिति न ज्ञातम्.

---

सकलसद्गुणसमग्रोऽयं विद्वद्ग्रामः प्राप्तो मम दिष्ट्या दृष्टिगोचरताम् ॥ **इति धर्मविजये प्रथमस्तबकः ।**

अथ कविवचःपुष्पैर्गन्धोत्तरैरधिवासितं सुचरितसुधापूरं शाहप्रभोर्बुधजीवनम् ।

श्रुतियुगपुटेनास्वाद्यानन्दबन्धुरितान्तरः सकुतुकमसौ धर्मस्तञ्जापुरीं समुपागमत् ॥

स्थलान्तरेऽपि धर्मविजये 'सर्वसद्गुणरत्नरत्नाकरः शाहमहाराजो नाम मञ्जुतरविनिवेशसमञ्चितं तञ्जनगरीमधिवसति ।' इति.

अयं भूमिनाथकविरपि श्रीरामभद्रमखीन्द्रस्य शिष्य एवेति प्रतिभाति. यतः ग्रन्थारम्भे पद्यद्वयानन्तरम्—

'रामचन्द्रचरणारविन्दयोराश्रयप्रबलतश्चिकीर्षति ।

भूमिनाथकविचक्रवर्त्यसौ शाहधर्मविजयोक्तिसाहसम् ॥

अस्माभिः पञ्चविंशे वयसि मदवशे पण्डितंमन्यमुख्यै-

र्यत्तादृक्षातिचित्रक्रमकवनपथव्याप्टतैस्तापितासि ।

तत्पुण्यश्लोकशाहाधिपचरितसुधापूरगाढावगाहै-

र्निःशेषं याहि शान्तिं भुवनजननि वाग्देवि मे संप्रसीद ॥ × × ।

साहित्यरत्नकोशाय शब्दब्रह्मस्वरूपिणे ।

रामभद्राय मखिने रामभक्त्यब्धये नमः ॥' इति.

एवं वर्तते.

अनन्तरं च स्तबकावसानेषु च 'इत्यभिनवभोजराजशाहमहीमहेन्द्रसुन्दरमुखचन्द्रसंदर्शनमहिमसान्द्रीकृतवाग्विलासस्य रामभद्राध्वरिवरप्रियशिष्यस्य तदीयवंशजन्मनो भूमिनाथविद्वत्कवेः कृतौ धर्मविजये तृतीयः स्तबकः' 'चतुर्थः स्तबकः' इत्येवं संदृश्यते.

अत्र धर्मविजये धर्मपुरुषः स्वयं म्लेच्छादिभिः सर्वतो विहन्यमान उत्तरदेशेषु कुत्रापि कोणे स्थातुमपि प्राप्तानवकाशः दक्षिणदेशान्प्रतस्थे. आगतश्च चोलेषु शहजिमहाराजेन सम्यक्पालितः सुखमुवासेत्येवं विषयसंबन्धः.

१. Burnell's Catalogue of the Tanjore Palace Library, p. 21. a.—'Hiranya-Kesi-Sutra-Vyakhyana by Hocani Karnataka Vâncehecvara of Cahajindrapura (or Tanjore)' &c.

---

१. २. अत्रापि तञ्जापुरी, तञ्जनगरी इत्येव प्रयोगः.

शहजिः १६९३ खिस्ताब्दे स्वनाम्नाग्रहारमेकं निर्माय विद्वद्भ्यो दत्तवान्. तत्र दानशासनपत्रे 'वेप्पत्तूराख्यग्रामस्य पश्चिमतः, त्रिभुवनाख्यग्रामस्य उत्तरतः मणञ्जेरिग्रामस्य पूर्वतः, अणक्कुडिग्रामस्य दक्षिणतः वर्तमानं तिरुवशलूरित्यपरनामधेयं शहजिराजपुरम्' इति स्पष्टमुक्तं भवति. तञ्जपुरस्य तन्नाम्नैव ग्रन्थेषु व्यवहारो दृश्यते. न कुत्रापि शहजिराजपुरमिति. तथा च शाब्दिकविद्वत्कविप्रमोदकनाम्नि निघण्टौ

'अस्ति तञ्जपुरं नाम हस्तिवाजिकुलाकुलम् ।
अशेषचोलधरणीविशेषकमनोहरम् ॥' इति.

तथा च हिरण्यकेशीयसूत्रव्याख्याने—

'तत्र तञ्जपुरं नाम राजस्थानमनुत्तमम् ।
राजानः प्रथितास्तत्र भोसलीयान्ववायजाः ॥' इति.

साहित्यरत्नाकरे—

'अम्लानाभिरपास्तरज्जुनहनक्लेशाभिरम्भोरुह-
स्रग्भिः सौधजुषामपाङ्गजनिभिः सश्लाघमेणीदृशाम् ।
आयुष्मान्रघुनाथभूमितरणीरभ्यर्चितो भूयसा
संजातप्रमदो बलेन निरगात्तञ्जापुरीतो बहिः ॥
तत्तादृशे काचन चोलदेशे रमानटीनर्तनरङ्गशाला ।
तञ्जापुरी नाम दरी हरीणां धराभुजां राजति राजधानी ॥' इति च.

एवमन्यत्रापि.

यच्च दृश्यते डॉक्टर् बर्नेल्नाम्ना कृते तञ्जपुरराजकीयसरस्वतीभाण्डागारस्थपुस्तकानां सूचीपत्रे चोक्कनाथकृतं जानकीपरिणयमिति, तच्चासांप्रतम्. प्रमादनिमित्तमेव. 'सोऽयं दीव्यति चोक्कनाथमखिनामक्रीतदासः कविः' इत्यस्यान्यथाग्रहणादेव स तथोक्तवानिति स्पष्टम्. सः 'सोऽयं दीव्यति चोक्कनाथमखिनामाक्रीतदासः कविः' इति पठित्वा 'चोक्कनाथमखिनामा' इति प्रथमान्तं पदविभागं कृतवान्. नाजानाच्चाक्रीतदासशब्दार्थम्. 'अक्रीतदासो जामाता' इति निघण्टुः. यदुच्यते तेनैव हूणसूरिणा विद्यापरिणयनाटकस्य कर्तुरानन्दरायमखिनो नारायणनाम्नः पुत्रत्वम्, तदपि तद्ग्रन्थासमवलोकनजनितप्रमादत एवेति स्पष्टं दरीदृश्यते. यतस्तस्मिन्नेव ग्रन्थे—

---

१. तिरुवशलूर्(Tiruvasalore)आख्योऽयं ग्रामः कावेरीतीरे कुम्भघोणनगरात्क्रोशद्वयमात्रे वर्तते.

२. 'अत्र **तञ्जानगरे** देशान्तरादागताः पौरजानपदा जना भगवत्यास्तावदानन्दवल्लयम्बाया महोत्सवदिदृक्षया सङ्घीभूताः' इति विद्यापरिणयनाटके (२ पृष्ठे).

३. Burnell's Catalogue, p. 168. b.—'जानकीपरिणय, a play of the last century by Ĉokkanatha'.

४. Burnell's Catalogue, p. 172. b.—'Vidyaparinaya Nataka by Anandaraya Makhin, son of Narayana.'

'तातो यस्य किलैकराजवसुधाधौरंधरीगीष्पतिः
क्षोणीपालकिरीटलालितपदः ख्यातो नृसिंहाध्वरी।'

इति वर्तते. एवमन्यत्रापि ग्रन्थेषु स बहुशः प्रमाद्यति. ग्रन्थत एव सम्यक्स्पष्टीभवत्यपि गङ्गाधराध्वरिकृतत्वे तत्कृतां रसिकरञ्जिनीं नाम कुवलयानन्दस्य व्याख्यामप्पयदीक्षितकृतां व्याहरति. तथा वक्तव्ये कारणं किमपि वा स्वयं न पश्यति. गङ्गाधराध्वरिणो
१ नामापि न स्मरति. तस्यां रसिकरञ्जिन्यां ग्रन्थारम्भे
२ 'गङ्गाधराध्वरी प्राज्ञस्तनोति विदुषां मुदे।
हृद्यां कुवलयानन्दटीकां रसिकरञ्जिनीम्॥' इति,

ग्रन्थावसाने च

'श्रीदेवसिंहसुमतेस्तनयः प्रतीतः श्रीविश्वरूपयतिराजकृपानुबन्धी।
श्रीचन्द्रचूडचरणाम्बुजगर्भदासो गङ्गाधराध्वरिवरः श्रुतपारदृश्वा॥
स्वां वैदुषीं प्रथयितुं विबुधावलीनामप्पय्यदीक्षितकृतेर्विवृतिच्छलेन।
तास्ताः पुरातनकृतीः परिशील्य टीकामेनां व्यधात्कृतधियः परिशीलयन्तु॥'

इति च समुपलभ्यते. तदनन्तरं तस्मिन्नेव ग्रन्थे 'श्रीमद्वाधूलवंशमुक्ताफलतिलकश्रीदेवसिंहसुमतिनन्दनस्य श्रीविश्वरूपेन्द्रगुरुचरणदिव्यकरुणाकटाक्षवीक्षासमासादितसकलविद्यावैशारद्यस्य श्रीमत्साग्निचित्यवाजपेययाजिगङ्गाधरमनीषिणः श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदप्पय्ययज्वावतंसविरचितकुवलयानन्दटीका रसिकरञ्जिनी समाप्ता' इति च वर्तते. अत्र ग्रन्थान्ते कतिपयपदानि केवलं वाचयित्वा तत्र 'श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदप्पय्ययज्वावतंसविरचितकुवलयानन्दटीका' इति दृष्ट्वा यथार्थतस्तदर्थमनवबुद्ध्यैव [1]रसिकरञ्जिन्या अप्पय्यदीक्षितकृतत्वमबुद्धिपूर्वकमाह स हूणसूरिरिति सर्वं स्फुटम्.

श्रीरामभद्रमखीन्द्रस्य नितरां श्रीरामे भक्तिः. तदीये रामस्तवकर्णरसायने प्रथमे निःष्यन्दे—

'मौलौ निधेहि मुकुटं त्यज बर्हिबर्हं बाणं गृहाण धनुषा सह मुञ्च वेणुम्।
शाखामृगैर्विहर संत्यज गोपबालान्रामो यदूद्वह भव त्वमथाश्रये त्वाम्॥' इति.

---

१. Burnell's Catalogue p. 55. b. 'Rasikaranjini, a tika, by the author of the text Appayya Dikshita.'

२. श्रीरामभद्रमखीन्द्रः कस्मिंश्चिद्दिने रात्रौ कृष्णभगवन्तं स्वप्ने दृष्ट्वा रामकृष्णयोर्मूर्तिमात्र एव भेद इति ज्ञातेऽपि तमपि भेदमसहमान एवमुक्तवानिति वदन्ति.

तदीयेषु सर्वेष्वपि ग्रन्थेषु बहुशः श्रीरामविषयका एव मङ्गलश्लोकाः. तथाहि परिभाषावृत्तिव्याख्याने—

'वन्देऽहं वसुधाकन्यावल्लभं वाक्प्रसिद्धये ।
अपि वन्दिष्यमाणो यं वाणीं वाल्मीकिरानशे ॥' इति.

तथैव षड्दर्शनीसिद्धान्तसंग्रहे व्याकरणमतप्रकटनारम्भे—

'शिलायामपि चैतन्यस्रजे कौशिकहर्षिणे ।
कुलदेवाय गुरवेऽप्यस्तु धर्मभृते नमः ॥' इति.

सिद्धान्तसारे—

'श्रीरामचन्द्रचरणौ शरणं विधाय प्रज्ञाततत्त्वनिवहः कुतुकात्क्षणेन ।
श्रीरामभद्रसुकृती कृतिनां हिताय सिद्धान्तसारमिदमद्भुतमातनोति ॥' इति च.

एवमन्यत्रापि जानकीपरिणयनाटक-शृङ्गारतिलकभाणादिष्वपि ग्रन्थेषु. अन्यच, शृङ्गारतिलकभाणे पारिपार्श्वकवाक्ये 'कथमस्य रघुवीरचरणारविन्दस्मरणनिरन्तरप्रवणचेतसो भाणनिर्माणेऽपि प्रवृत्तं हृदयम्' इति दृश्यते. पुनरन्यत्, रामविषयका एव बहवो ग्रन्थास्तेन निर्मिताः. तथाहि—चापस्तवः, तूणीरस्तवः, प्रसादस्तवः, बाणस्तवः, रामस्तवकर्णरसायनम्, विश्वगर्भस्तवः, इति.

श्रीरामभद्रमखीन्द्रस्य शिष्याः—(१) श्रीनिवासदीक्षितः, (२) वेङ्कटेश्वरकविः, (३) रघुनाथश्च.

तत्र—(१) श्रीनिवासदीक्षितः स्वरसिद्धान्तचन्द्रिकां कृतवान्. तत्र ग्रन्थे—

'व्याकृतिनिर्माणचणान्प्रणमामि त्रीन्मुनीञ्जगद्वन्द्यान् ।
गुरुमपि समष्टिमेषां वन्दे श्रीरामभद्रयज्वानम् ॥
कष्टं व्याकरणं पतञ्जलिरपि प्राह स्म तत्राप्यसौ
दुर्ज्ञाना मतिमद्भिरप्यतितरां कष्टा स्वरप्रक्रिया ।
क्वैषा सा त्वमलीमसा मम मतिर्मन्दा तथाप्युत्सहे
यन्मह्यं दयतेतरां निरुपधि श्रीरामभद्रो गुरुः ॥
संकृत्यन्वयसंभवाद्गुणमहाम्भोधेरनन्ताम्बया
जाह्नव्येव पवित्रया क्षितितले संवर्धितश्रेयसः ।
जातः कृष्णविपश्चितो विधुरिव प्रीणन्बुधानां मनः
सन्मार्गाभिगमोज्ज्वलो विजयते स श्रीनिवासः सुधीः ॥' इति.

(२) वेङ्कटेश्वरकविप्रणीतेषु ग्रन्थेषु शाब्दिकविद्वत्कविप्रमोदं नामोणादिनिघण्टुः, पतञ्जलिचरितस्य प्रथमसर्गस्य ललिताख्या व्याख्या च लभ्येते. तत्र प्रथमग्रन्थे—

'पुत्रः श्रीदक्षिणामूर्तेर्गङ्गापावितवर्ष्मणः ।
रामभद्रमखिश्रेष्ठदयासर्वस्वभाजनम् ॥

वेदश्रौतनिधिः शब्दशास्त्रमार्गाध्वनीनधीः ।
कौण्डिन्यकुलमूर्धन्यः सुमतिर्वेङ्कटेश्वरः ॥
निघण्टुं पण्डितप्रीत्यै निबध्नाम्येष नूतनम् ।
उणादिपञ्चपाद्यां ये शब्दाः पूर्वैरुदाहृताः ॥
व्युत्पादितक्रमेणैव सविमर्शं वदामि तान् ।
अत्यन्तदुष्करेऽप्यस्मिन्भवाम्यहमकातरः ॥
श्रीरामभद्रमखिनां देशिकानामनुग्रहात् ॥' इति.

तत्र द्वितीयग्रन्थे—

'यं भाष्यं महदध्यजीगपदृषिः श्रीचोक्कनाथाध्वरी
यो रामस्य च नीलकण्ठमखिना बाणस्तवं कारितः ।
व्याचष्टे किल रामभद्रमखिनस्तस्याप्तशिष्यः कृतिं
भोगीन्द्रस्य हि वेङ्कटेश्वरकविर्यस्यां निबद्धं यशः ॥
टीकेयं ललिता नाम गिरिजाता कृता मया ।
रमयेदपि सर्वज्ञं विषमेक्षणमप्यहो ॥' इति.
'रामभद्रमखिनामपि वाचां राजशेखरकवेरपि वाचाम् ।
तारतम्यकणिकामपि वक्तुं नाहमस्मि कुशलो न परो वा ॥

इति श्रीकौण्डिन्यतिलकदक्षिणामूर्तिपुत्रवेङ्कटेश्वरशास्त्रिविरचितायां पतञ्जलिचरितव्याख्यायां ललिताख्यायां प्रथमः सर्गः ।' इति च.

(३) रघुनाथेन के वा ग्रन्थाः कृता इति न विज्ञायते.

श्रीरामभद्रमखिनः समकालिका विद्वन्मणयः षड्दर्शनीसंग्रहे उच्यन्ते. यथा—

'रामभद्राध्वरिवरो रामनाथमखीश्वरः ।
नरहर्यध्वरिमणिः पेरियप्पबुधाग्रणीः ॥
श्रीवेङ्कटेशविबुधः श्रीमान्यज्ञेश्वराध्वरी ।
मखी च श्रीनिवासार्यो महतामपि संमतः ॥
शासनाक्षरमाकर्ण्य शाहराजस्य धीमतः ।
सप्तैते शास्त्रसिद्धान्तान्संगृह्णन्ति यथामति ॥' इति.

शहजिमहाराजपुरग्रामस्य प्रतिग्रहीतारः सप्तचत्वारिंशत्. तत्र शास्त्रसंख्यया पण्डितेभ्यो

---

१. अतः श्रीरामबाणस्तवः श्रीनीलकण्ठमखिनः प्रेरणया श्रीरामभद्रदीक्षितेन कृत इति स्फुटमवगम्यते.

२. शहजिराजपुराग्रहारस्य प्रतिग्रहीतारः—

१. वासुदेवदीक्षितः
२. भास्करदीक्षितः
३. तिप्पादीक्षितः
४. ईश्वरशास्त्री
५. प्रतिवसन्तवैद्यनाथदीक्षितः
६. कच्छपेश्वरदीक्षितः

राजा क्षेत्राण्यदात्. एकैकस्य शास्त्रस्य पारंगमेभ्य एकैकं क्षेत्रमिति शास्त्रसंख्यया दत्तानि क्षेत्राणीति प्रसिद्धिः. तत्र—(१) वासुदेवदीक्षितः, (२) भास्करदीक्षितः, (३) तिप्पादीक्षितः, (४) ईश्वरशास्त्री, (५) वैद्यनाथदीक्षितः, (६) रामभद्रमखी, (७) त्रिवेदिभाट्टाचार्यः, एते चतुःशास्त्रनिष्णाता महापण्डिताः प्रत्येकं क्षेत्रचतुष्टयभाजः. (१) पेरियप्पाकविः, (२) वेदकविः, (३) महादेवकविः, एते पादाधिकक्षेत्रद्वितयभाजः. एते प्रथिताः सर्वे महाकवयः.

पेरियप्पाकविः 'शृङ्गारमञ्जरीशाहराजीयम्' नाम नाटकं प्रणीतवान्. वेदकविः (वेदकवीश्वरः) 'विद्यापरिणयम्' नाम नाटकं विरच्य आनन्दरायमखिकृतत्वेन प्रख्यापितवानिति श्रूयते. 'संगीतमकरन्दः' इत्यपि ग्रन्थो वेदकविना निरमायि. महादेवकविना 'अद्भुतदर्पणम्' नाम नाटकं कृतम्. तेनैव 'शुकसंदेशम्' नाम ग्रन्थान्तरमपि कृतमिति श्रूयते. वेङ्कटकृष्णदीक्षितेन 'नटेशविजयकाव्यम्', 'श्रीरामचन्द्रोदयकाव्यम्', 'उत्तरचम्पूः', 'कुशलवविजयनाटकम्', इत्येतानि कृतानि. अप्पादीक्षितेन 'गौरीमायू-

---

७. रामभद्रदीक्षितः
८. वीरराघवदीक्षितः
९. अय्यवारुदीक्षितः
१०. कुप्पादीक्षितः
११. वेदकवीश्वरः
१२. महादेवकविः
१३. कोण्डावधानी
१४. त्रिवेदिभाट्टाचार्यः
१५. पेरियप्पाकविः (वैनतेयकविः)
१६. नारायणदीक्षितः
१७. अप्पादीक्षितः
१८. × ×
१९. नारायणशास्त्री
२०. पञ्चरत्नं अनन्तनारायणशास्त्री
२१. वेङ्कटेश्वरवाजपेययाजी
२२. महादेववाजपेययाजी
२३. राजवल्लभशास्त्री
२४. श्रीवेङ्कटेश्वरशास्त्री
२५. द्विवेदिनारायणावधानी
२६. वेङ्कटकृष्णदीक्षितः
२७. नारायणशास्त्री
२८. मात्तूर् नारायणदीक्षितः
२९. वेङ्कटकृष्णावधानी
३०. कुप्पापण्डितः
३१. विश्वपतिशास्त्री
३२. गणपतिसोमयाजी
३३. मार्गसहायदीक्षितः
३४. मधुररामशास्त्री
३५. नरसिंहदीक्षितः
३६. वेङ्कटाद्रिदीक्षितः
३७. रङ्गनाथशास्त्री
३८. रामजोसी
३९. सामवेदिवेङ्कटेश्वरशास्त्री
४०. श्रीनिवासशास्त्री
४१. शट्टनाथकविः
४२. वेङ्कटेश्वरकविः
४३. लक्ष्मणशास्त्री
४४. विजयराघवदीक्षितः
४५. आदिनारायणश्रौती
४६. पाठकशाला
४७. { शिवक्षेत्रम्, विष्णुक्षेत्रम् }

रमाहात्म्यचम्पूः' कृता. भास्करदीक्षितेन 'सिद्धान्तसिद्धाञ्जन'स्य व्याख्या 'रत्नतूलिका' नाम कृता. महादेववाजपेयिना 'बौधायनश्रौतसूत्र'व्याख्या कृता. रामभद्रदीक्षितेन 'जानकीपरिणयनाटकम्', 'पतञ्जलिचरितकाव्यम्', 'शृङ्गारतिलकभाणम्', 'परिभाषावृत्तिव्याख्यानम्', 'षड्दर्शनीसिद्धान्तसंग्रहः', 'रामबाणस्तवः', 'चापस्तवः', 'तूणीरस्तवः', 'प्रसादस्तवः', 'विश्वगर्भस्तवः', 'रामस्तवकर्णरसायनम्', 'सिद्धान्तसारः' इत्यादयः. सर्वेऽप्येते कवयः शहजिमहाराजपुर(तिरुवशलूर्)वास्तव्याः. अन्यैः के वा ग्रन्थाः कृता इतीदानीं न ज्ञायते.

संगीतमकरन्दे—

'संगीतमकरन्दोऽयं मकरन्दमहीपतेः ।
श्रीशाहस्य प्रवीणस्य मुदे वेदेन निर्मितः ॥'

कुशलवविजयनाटके—

'आदिष्टोऽस्म्यहमशेषकलाभिनवभोजराजेन भोसलकुलजलधिपूर्णचन्द्रेण सार्वभौमेन शहजिमहाराजेन । × × । अस्ति खलु समस्तजगत्प्रशस्ताभिजनशीलस्य वाधूलकुलजलधिकौस्तुभस्य विद्वज्जनश्लाघनीयस्य वेङ्कटाद्रिमहोपाध्यायस्य तृतीयऋणापकरणकारणीभूतदेहपरिग्रहो मङ्गलाम्बिकागर्भशुक्तिमुक्तामणिर्वेङ्कटकृष्णयज्वेति विख्यातः कविः । × × ।

श्रीरङ्गपट्टणपतित्रिशिरःपुरेशचेञ्जीपुराधिपतितञ्जपुराधिनाथैः ।
उच्चैर्यथोत्तरमुदञ्चितगौरवश्रीरास्ते सुखं [1]शहजिराजपुरेऽधुनासौ ॥
बाल्येऽसौ निजतातपादनिकटादभ्यस्तसाङ्गश्रुतिः
सम्यक्शीलितकाव्यनाटकरसालंकारभावक्रमः ।
चक्रे काव्ययुगं नटेशविजय-श्रीरामचन्द्रोदया-
भिख्यं सोत्तरचम्पुधीरपदसंदर्भेऽस्य यत्नः कियान् ॥'

अत्र च प्रमाणमशेषकलाविशेषणावधारणनिपुणस्य वीर[2]राघवयज्वनो विख्याता सूक्तिः—

'वेङ्कटकृष्णाध्वरिणः कविताप्रागल्भ्यमवगाह्य ।
आढौकते मनो मे प्रौढिं भवभूतिकालिदासादेः ॥'

महिषशतकमपि तिरुवशलूरित्युपनामकश्रीशहजिमहाराजपुरवास्तव्येन कुट्टिकविरिति प्रख्यातनाम्ना वाञ्छेश्वरकविना प्रतापसिंहमहाराजस्य काले कृतम्. तस्यैव कवेर्नप्त्रा माधवार्यस्य पौत्रेण नरसिंहपुत्रेण वाञ्छेश्वरेण १७३५[3] शालिवाहनशके व्याख्यातं च. महिषशतकस्य व्याख्यात्रैव वाञ्छेश्वरेण हिरण्यकेशीयसूत्रव्याख्यानं च कृतम्. महिषशतकस्य कालः प्रतापसिंहमहाराजस्य शैशव एवेति तस्मादेव ग्रन्थात्सुव्यक्तम्. प्रतापसिंहमहाराज-

१. अतः शहजिराजपुरात् तञ्जपुरं भिन्नमिति स्फुटम्.

२. अयं वीरराघवयज्वा शहजिमहाराजपुरस्य प्रतिगृहीतॄणामेकतमः.

३. 'बाणाभ्यद्रीन्दुविमिते शाककाले सुधीमुदे । भूयाद्वाञ्छेश्वरकृता व्याख्या श्लेषार्थचन्द्रिका ॥'.

श्च शालिवाहनशके १६६२ संवत्सरादारभ्य १६८६ वत्सरावधि राज्यमकरोत्. हिरण्यकेशीयसूत्रव्याख्यानं च शालिवाहनशके 'वस्वग्न्यद्रिक्षिति(१७३८)मिते' कृतम्. महिषशतकस्य कविर्द्रविडदेशीय इति ग्रन्थादेव सम्यग्ज्ञायते, व्याख्यानतश्च. एवं सति पुण्यनगर्यां मुद्रिते महिषशतकपुस्तके तदौत्तरेण केनचिदन्येन कृतमिति चान्यच्च यदुच्यते, तदसत्. अयं वाञ्छेश्वरकविर्बाल्य एव नितरां साहित्यशक्तिमानासीत्. अतस्तस्य कुट्टिकविरिति प्रथासीत्. कुट्टिकविरित्यस्य बालकविरित्यर्थः. 'कुट्टि' इति 'बाल'स्य द्रविडभाषायां नाम. अन्यच्च, ये तावत्तत्रोदाहृता विद्वांसः, ते च सर्वे तञ्जनगरराजसभासद एवासन्. श्लोकेषु द्रविडभाषाप्रसिद्धधान्यविशेषा उच्यन्ते. ग्रन्थान्ते च प्रतापसिंहमहाराजं प्रत्याशिषः प्रयुज्यन्ते. पुण्यनगर्यां प्रख्यापिते महिषशतकग्रन्थे बहुशः पाठभेदाः कृताः. तत्र मुद्रितं व्याख्यानं च बहुशोऽशुद्धं संलक्ष्यते.

महिषशतके तृतीयः श्लोकः (अत्रत्यव्याख्या च)—

'नानाजिप्रभुचन्द्रभानुशहजीन्द्रानन्दरायादयो
विद्वांसः प्रभवो गताः श्रितसुधीसंदोहजीवातवः ।'

व्याख्या—'स्वस्य महिषप्रबन्धकरणे निमित्तं वदन् तदुपोद्धाततया आदौ कृषिं प्रशंसति—नानाजीति । नानाजिः धर्मश्रेष्ठः अमात्यः प्रभुचन्द्रभानू राजा शहजिः प्रख्यातो राजा आनन्दरायस्तदमात्यः प्रसिद्धः × × ।'

महिषशतके सप्तमः श्लोकः—

'ख्यातः कुट्टिकविस्तु दुर्धनिगृहद्वारेषु निद्रायते ।'

व्याख्या—'× × अम्बुमखिनः अम्बुदीक्षितस्य स्वन्नं सुष्ठु अन्नं शाल्योदनादिकं स्वर्णं काञ्चनमभूत् । × × तत्सहाध्यायिनः स्वस्य दशामाह—कुट्टिकविः स्वयं दुर्धनिनां दुष्टधनिकानां गृहद्वारेषु बहिःप्रदेशेषु निद्रायते स्वपिति इति ख्यातः ।'

महिषशतके सप्तविंशतितमः श्लोकः—

'शम्बा कारु पिषाण शित्तिरियदामुञ्जालि शम्बालिका
सूचीकारुविशेषकोद्रव × × ।'

व्याख्या—'शम्बेति । कारुविशेषेऽत्यन्तं द्राविडभाषाप्रसिद्धधान्यविशेषः × × ।'

महिषशतक एकोत्तरशततमः श्लोकः—

'श्रीमद्भोसलवंशदुग्धजलधेः संपूर्णचन्द्रोपमो
यः शास्ति क्षितिमक्षति क्षितिपतिर्मूर्तः प्रतापः स्वयम् ।
दीर्घायुर्जितशत्रुरात्मजयुतो धर्मी प्रजारागवा-
नुल्लाघोऽस्तु स निस्तुलैर्निजसभास्तारैः क्रमादागतैः ॥'

व्याख्या—'एवं महिषं सर्वदेवात्मकत्वेन स्तुत्वा तन्मुखेन सर्वाद्वैतं प्रबन्धपरमतात्पर्यविषयीभूतं निरूप्य सोपजीव्यराजवंशस्याशिषं पुनः प्रार्थयते—श्रीमदिति । श्रीमान् लक्ष्मीसंपन्नः भोसलवंश एव दुग्धजलधिः क्षीराब्धिः तस्य संपूर्णचन्द्रोपमो राकाचन्द्रसदृशः यः

प्रतापः प्रतापसिंहाख्यः मूर्तिमान् स्वयं क्षितिपतिः भूपतिः सन् क्षितिं भूमिं अक्षति निरुपद्रवं यथा तथा शास्ति रक्षति स प्रतापसिंहाख्यो राजा दीर्घायुश्चिरजीवी × × । उल्लाघोऽस्तु अरोगदृढगात्रो भवतु × × ।'

महिषशतके द्व्यधिकशततमः श्लोकः—

'वाञ्छानाथकवेः कृतिश्च कुरुतां निर्मत्सराणां मुदम् ।'

व्याख्यानोपक्रमे—

'श्रीमत्कवेरजातीरं विद्वद्वृन्दोपशोभितम् ।
अत्युत्तमशिवक्षेत्रं विष्ण्वादिस्थानमस्ति हि ॥
तत्र तञ्जपुरं नाम राजस्थानमनुत्तमम् ।
राजानः प्रथितास्तत्र भोसलीयान्ववायजाः ॥
तदमात्यकुलोत्पन्नः श्रीमान्वाञ्छेश्वरः सुधीः ।
शिष्टः कनटिजातीयो वेदवेदाङ्गपारगः ॥
नीतिमार्गेण राजानं तत्तत्कालेष्वचोदयत् ।
कदाचिद्बालको राजा मेलयित्वा खलान्बहून् ॥
खेलंस्तैः सर्वदा मुग्धो न शुश्राव हितं वचः ।
तेभ्यो निवर्तयन्भूपं सन्मार्गे संप्रवर्तयन् ॥
महिषस्तुतितो राजबुद्धिं चक्रे सुनिर्मलाम् ।
तस्य नप्ता माधवार्यपौत्रः श्रीनरसिंहतः ॥
वाञ्छेश्वरो लब्धजन्मा पितृप्रोक्तेन वर्त्मना ।
व्याख्यास्ये संप्रणम्यैतान्माहिषं शतकं मुदा ॥
काहं मुग्धमतिः क्वेयं साहिती सर्वपूजिता ।
तथापि जन्म तद्वंशे प्रवर्तयति मामिह ॥
काशीस्थान्पण्डितान्नत्वा लिख्यते किंचिदेव तु ।
तद्गृह्णन्तु मुदा व्याख्यां तन्वन्तु विपुलामपि ॥
नाशास्त्रं लिख्यते किंचिन्नानपेक्षितमेव च ।
तथापि सर्वतन्त्रार्था उक्ता मूलानुसारतः ॥'

व्याख्यानोपसंहारे—

'प्रियतां कुट्टिकृतिना निर्मितेयं सुधीमुदे ।
भूयाद्वाञ्छेश्वरग्रन्थव्याख्या श्लेषार्थचन्द्रिका ॥
बाणाग्न्यद्रीन्दुविमिते शाककाले सुधीमुदे ।
भूयाद्वाञ्छेश्वरकृता व्याख्या श्लेषार्थचन्द्रिका ॥'

हिरण्यकेशीयसूत्रव्याख्यानोपक्रमे—

श्रीशाहराजेन्द्रपुरे श्रीशाहजिराजविष्टपैः सदृशे ।
कृतवासो विमलमतिः साम्बपदद्वन्द्वभक्तिनिरतश्च ॥

प्रख्यातमहिषशतकप्रौढकवेः कुलललामभूतोऽसौ ।
आचार्यस्वामिवर्यैः पाठनपीठे प्रतिष्ठितोऽयं प्राक् ॥
आमूलाग्रमधीताध्यापितषड्दर्शनीरहस्यश्च[1] ।
सरसकमनीयवचनः शरभमहाराजनिकटवर्ती च ॥
कविसार्वभौमकाव्ये पदवाक्यतदर्थसंश्रयैर्दोषैः ।
दोषोल्लासोदाहृतिरेकत्रैव प्रकाशिता येन ॥
मलमासनिर्णयपटुः खण्डितदुर्वादिगर्वधिषणश्च ।
साम्बसदाशिवचरणद्वन्द्वसपर्याविदितवेदार्थः ॥
इति स्तुवन्ति यं नित्यं वासुदेवादयस्त्वसौ ।
काशीयात्रेच्छया गच्छन्कृष्णातीरनिवासिभिः ॥ × × ।
वस्वश्व्यद्रिक्षितिमिते शके वाञ्छेश्वरः सुधीः ।
हिरण्यकेशिनां सूत्रं व्याख्यातुमुपचक्रमे ॥'

श्रीरामभद्रमखीन्द्रेण कृतानां ग्रन्थानां तत्कृतत्वं बहुशस्तेष्वेवोच्यते. क्वचित्क्वचित्पदसाम्येन भावसाम्येन श्लोकसाम्येन च सदृशतमेन रचनाचातुर्येण च स्वकृतत्वं व्यञ्जयति कविः. तच्च यथोपगतं दर्शयिष्यामः. यथा—

(१) शृङ्गारतिलकभाणे—

'किमिदं प्रभातप्राया रजनी संवृत्ता । यदिदानीं × × ।
चक्रद्वन्द्वं चटुलनलिनीनालडोलाधिरूढं
गाढाश्लिष्टं त्यजति रजनीजातविश्लेषदुःखम् ।
नक्तं भुक्त्वा नवकुमुदिनीं विश्रमार्थी विभाते
गङ्गागेहं विकचकमलं गाहते चञ्चरीकः ॥ २२ ॥'

पतञ्जलिचरितेऽष्टमे सर्गे—

'चक्रद्वयीमधिगताम्बुजनालडोलामन्योन्यसंघटितपक्षपुटामकाण्डे ।
दूरे वियोजितवतो दिवसात्ययस्य दुष्कीर्तिवृन्दमिव संददृशे तमिस्रम् ॥ २६ ॥
आसायमम्बुजवनीमलिराप्रभातमाश्रित्य तत्समयमत्यजदेव दूरे ।
क्व स्थातुमिच्छति मुखे मुकुलीकृतेऽपि स्थानं न चेत्कुवलये क्वचिदप्यलभ्यम् ॥ २९ ॥'

(२) शृङ्गारतिलके—

'भानोः पश्चिमशैलकन्दरकुटीमभ्येयुषः संभ्रमा-
त्संध्यारागमिषेण किं विगलिता भान्ति त्विषः पञ्चषाः ।

---

१. तदुक्तं शास्त्रनिर्णये—

'कपिलस्य कणादस्य गौतमस्य पतञ्जलेः ।
व्यासस्य जैमिनेश्चैव दर्शनानि षडेव तु ॥'

किंचैषा कृतनिश्चयेन कवलीकर्तुं महीमण्डली-
माक्रान्ता प्रथमं घनेन तमसा नीला तमालाटवी ॥ २२० ॥'

पतञ्जलिचरितेऽष्टमे सर्गे—

'हत्वानुतापभरिते द्विजराजलक्ष्मीं पाश्चात्यमब्धिमघनिष्कृतयेऽनुमङ्क्तुम् ।
चण्डद्युतौ व्रजति संभ्रमतोऽस्य शीर्णा रेजुस्त्विषस्त्रिचतुरा इव सांध्यरागाः ॥ २४ ॥
भूमण्डलस्य कवलीकरणाय पूर्वं तालीवनं प्रविशता तमसां भरेण ।
संदर्शिता ननु चमूविनिवेशभङ्ग्या कालीकटाक्षकलुषः किल कालिमैकः ॥ २५ ॥'

(३) शृङ्गारतिलके—

'इदानीं वस्तूनां बृहदणुविभागानपहर-
न्समीकुर्वन्निम्नोन्नतमपि जगत्यन्धतमसम् ।
मुदं वासोमाल्याभरणरुचिसाधारणतया
विधत्ते संकेतस्थलमभिसृतानां मृगदृशाम् ॥ २२१ ॥'

पतञ्जलिचरितेऽष्टमे सर्गे—

'दिष्ट्या वृता वसुमती तमसा घनेन निम्नोन्नतानि भुवि तेन समीकृतानि ।
इत्यादरादभिसृतिः कुलटाजनस्य जाता तदा सदधिपेन विना यथेष्टम् ॥ ३० ॥'

(४) शृङ्गारतिलकभाणे—

'आरक्तसंकुचदपाङ्गमुदस्तहस्तमुन्नम्रितस्तनमृजूकृतमध्यभागम् ।
नीवीसमुच्छ्वसितदर्शितनाभिदेशं निद्रावशेषकलुषा कुरुतेऽङ्गभङ्गम् ॥ ६६ ॥'

पतञ्जलिचरिते द्वितीयसर्गे—

'स्रस्तनीविनहनं च्युतचेलं व्यञ्जितस्तनमृजूकृतमध्यम् ।
पाणिना विटपमानमयन्ती पल्लवानहृत काचन तासु ॥ ३६ ॥'

(५) शृङ्गारतिलकभाणे—

'आकर्षत्युपसृत्य वेणिलतिकामप्यम्बुजेनाहतो
नायं मुञ्चति पादमूलमृजुतां चित्ते विधत्ते गिराम् ।
प्रेमावेशविकस्वरेण शनकैरङ्गीकृतश्चक्षुषा
कामीवैष तवानताङ्गि पुरतः केकी मुदा नृत्यति ॥ ७५ ॥'

पतञ्जलिचरिते द्वितीयसर्गे—

'मा विकर्ष मम वेणिलतामित्याहतः करजुषा कमलेन ।
किं व्यथेति पुनरेव तरुण्या चुम्ब्यते स्म सुकृती ननु बर्ही ॥ ४२ ॥'

(६) शृङ्गारतिलकभाणे—

'अम्भोजकाननमहोत्सवलक्षणानि शीतांशुकान्तिशिथिलीकृतिसूचकानि ।
आविर्भवन्ति मिथुनश्रुतिदुःसहानि कुक्कुरुतानि चरणायुधकण्ठनालात् ॥ १३ ॥'

पतञ्जलिचरितेऽष्टमसर्गे—

'अम्भोजकाननमहोत्सवलक्षणानि शीतांशुकान्तिशिथिलीकृतिसूचकानि।
तावन्निशम्य चरणायुधकूजितानि शय्यामहो परिजहार न जारयुग्मम्॥ ४८॥'

(७) शृङ्गारतिलकभाणे—

'आस्ते कुत्रचिदम्बरं हिमकरः कादम्बिनी च क्वचि-
द्वापी क्वापि चकास्ति मीनमिथुनं कोकद्वयं चान्यतः।
किंचाधः पुलिनोच्चयस्य कदलीकाण्डाववाग्रोपितौ
तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः॥ २२८॥'

जानकीपरिणयनाटके पञ्चमाङ्के—

'**विराधः**—(दृष्ट्वा स्वगतम्।) एषा निरतिशयरूपलावण्या जानकी। (साश्चर्यम्।) अपूर्वा खल्वियं वेधसो विरचना। अथवा।

ऊर्ध्वे नीरदवृन्दमैन्दवमिदं बिम्बं त्वधो निर्मितं
व्योम्नः पल्वलचित्रितस्य निहितौ शैलावुपर्युन्नतौ।
किंचाधः पुलिनोच्चयस्य कदलीकाण्डाववाग्रोपितौ
तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः॥ २२॥'

(८) शृङ्गारतिलकभाणे—

'कालीहर्यक्षकण्ठध्वनिभरपरुषं कुर्वतोरट्टहासं
साटोपन्यस्तपादक्रमनमदवनि भ्राम्यतोर्मण्डलेन।
निर्घातक्रूरमुष्टिप्रहृतबृहदुरस्तारठात्कारघोरा
युद्धारम्भा हिडिम्बानिलसुतबलयोर्मल्लयोरुल्लसन्ति॥ १४८॥'

रामबाणस्तवे—

'कालीहर्यक्षकण्ठध्वनिभरपरुषं कुर्वतामट्टहासं
साटोपन्यस्तपादक्रमनमितभुवां भग्नशूलद्रुमाणाम्।
निर्घातक्रूरमुष्टिप्रहृतबृहदुरस्तारठात्कारघोरे
युद्धे निर्दग्धलङ्कं रघुपतिविशिखं नौमि रक्षःकपीनाम्॥ ८९॥'

(९) शृङ्गारतिलकभाणे—

'सखे, पश्य रमणीयतामुपवनस्य।

पक्वानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि
स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलोऽपि।
संदृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला
भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः॥ २०५॥'

जानकीपरिणये द्वितीयाङ्के—

'**विद्युज्जिह्वः**—अहो रामणीयकं मुनेराश्रमस्य। इह हि

पक्वानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि
स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलोऽपि।

संदृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला
भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः ॥ ४ ॥'

(१०) जानकीपरिणयनाटके चतुर्थाङ्कप्रारम्भे—

'निहत्य युधि ताटकां सह बलैः सुबाहुं तथा
करालमपि राघवो यमपुरीमनैषीदिति ।
यमप्रहितवाचिकं निशमयन्वृषा मन्यते
निशाटवधनाटकप्रथमभूमिकोपक्रमम् ॥ १ ॥'

श्रीरामबाणस्तवे—

'येन प्रौढेन मध्येमहि तरसभरालंक्रियाकल्पकेन
श्लोकानुत्पादयित्रा रजनिचरकुलोत्पाटनानाटकस्य ।
न्यस्तं प्रस्तावनायाः सपदि किल पदे ताडनं ताटकायाः
सोऽस्माकं रामबाणः सुललितरचनां सूक्तिमाविष्करोतु ॥ १० ॥'

(११) परिभाषावृत्तिव्याख्याने मङ्गलाचरणे—

'करोमि हृदयाम्बुजे कमपि वीरमम्भोनिधे-
र्निबन्धनमबिन्धनज्वलनबन्धुतूणीशयम् ।
न कश्चिदपि दृश्यते जगति यस्य शक्तो जये
स्मरं प्रहितजानकीनयनपञ्चबाणं विना ॥ २ ॥'

रामस्तवकर्णरसायने प्रथमे निःष्यन्दे द्वादशः श्लोकोऽयमेव दृश्यते.

(१२) जानकीपरिणयनाटके प्रथमाङ्के—

'शुण्डालेन सलीलमेष कलभो वक्त्रान्मृणालोज्ज्वलं
जृम्भारम्भविकस्वरान्मृगपतेर्दंष्ट्राङ्कुरान्कर्षति ।
एषा वत्सतरी च मातरि तृणान्यत्तुं गतायां क्वचि-
द्वीपिन्या वरकन्दरस्थितिजुषः स्तन्यं पयश्चूषति ॥ ३९ ॥'

पतञ्जलिचरिते द्वितीयसर्गे—

'यत्र काननचरो गजराजो वीतकर्दममृणालविशङ्की ।
जृम्भणेषु चटुलेन करेण व्याचकर्ष किल केसरिदंष्ट्राम् ॥ २ ॥
यत्र चत्वरमपास्य तटान्ते चर्वितुं गवि तृणानि गतायाम् ।
द्वीपिनी रसनया परिलिह्य स्तन्यमर्पयति वत्सतरस्य ॥ ४ ॥'

(१३) जानकीपरिणयनाटके षष्ठाङ्के—

'खेलद्धेमाब्जमालं शकलितरणकृद्दुन्दुभिक्रूरशृङ्गं
कक्षप्रक्षिप्तरक्षःपतिविधुतशिरःप्रान्तघातक्षमान्तम् ।
तारावक्षोजभाराहृतघुसृणरसं वालिनो बाहुमध्यं
विध्यन्बाणो विदध्यान्मम शुभमनिशं रामतूणीरधामा ॥ ६७ ॥'

बाणस्तवेऽप्येकोनषष्टितमः श्लोकोऽयमेव दृश्यते.

(१४) जानकीपरिणयनाटके तृतीयाङ्के मारीचवाक्ये—

'यावद्बाणसमीरवारितमहामायारजोदुर्दिनां
तेन क्षत्रियबालकेन बलिना दृष्ट्वा पुरस्ताटकाम् ।
हन्त स्त्रीति जुगुप्सया शिथिलितो मौर्वीविकर्षी करो
वेगादुत्पतितेन तावदिषुणा सा च स्वयं चिच्छिदे ॥ ३ ॥'

जानकीपरिणये चतुर्थाङ्के विश्वामित्रवाक्ये—

'यज्ञो मे भवितेति कोसलपतिं दारैः सुतैश्चानय-
न्नुद्धस्ताटकयास्मि वर्त्मनि रजोवृष्टिं सृजन्त्या भृशम् ।
वत्से स्त्रीति पराङ्मुखेऽप्युदपतद्बाणः स्वयं कार्मुका-
च्छिन्ना तेन भुजान्तरे महति सा जीवं जहावञ्जसा ॥ ३५ ॥'

श्रीरामबाणस्तवे—

'प्राप्यानुज्ञामभिज्ञात्कुशिककुलभुवस्तापसात्कोपसान्द्रे
स्वामिन्युन्मोक्तुकामेऽप्यनुचितमिदमित्यन्तरुद्भिन्नचिन्तः ।
कंचित्कालं विलम्ब्य स्मृतनिखिलजगद्रक्षणस्तत्क्षणं यः
संतापं ताटकाया व्यधित युधि तमेवाश्रये रामबाणम् ॥ ५ ॥'

(१५) जानकीपरिणयनाटके तृतीयाङ्के करालवाक्ये—

'प्रभ्रष्टरत्नमुकुटं पतितासिखेटं विस्रस्तकेशमभितस्ततपाणिपादम् ।
मारीचमभ्रमिव चण्डमरुद्विधुन्वन्निन्ये क्वचिद्रघुकिशोरशरः क्षणेन ॥ ६ ॥'

श्रीरामबाणस्तवे—

'मौलिभ्रश्यत्किरीटं गलपरिविगलच्चारुमुक्ताकलापं
त्रासोद्यन्मुष्टिबन्धश्लथकरयुगलस्रंसमानासिखेटम् ॥ १५ ॥'
'स्रस्तव्यालोलकेशे ततकरचरणच्छादिताशावकाशे ॥ १६ ॥'
'क्षिप्तश्चण्डानिलेनाम्बुद इव गगने × × ॥ १९ ॥'

श्रीरामभद्रमखीन्द्रः शहजिमहाराजमन्त्रिणा नृसिंहरायमखिनस्तनूजेनानन्दरायमखिना सम्यक्सत्कृत्यादृत इति स्पष्टं दरीदृश्यते. तथा च तदीयपरिभाषावृत्तिव्याख्याने—

'सरसकवितारसज्ञः षड्दर्शन्यर्थतत्त्वविदुदारः ।
भाति त्र्यम्बकयज्वा भाग्यपरीणाम एव सूरीणाम् ॥
एको यस्य विशुद्धयेऽलमुदयः काकोजिविद्वत्प्रभो-
रत्रेरप्यधिकादमर्त्यतटिनीस्नानं तदभ्युच्चयः ।
बोधे सत्यपि तावदौपनिषदव्यक्त्यै जगत्यां विधि-
प्रामाण्यस्य सहस्रदक्षिणमखानुष्ठानमप्यादृतम् ॥
जातं जयन्तमिव शार्ङ्गभृता समस्य यस्याग्रजान्मघवतो नरसिंहरायात् ।
वृद्धश्रवःप्रियगुणं विबुधैरुपास्यमानन्दरायमखिनं कथयन्ति सन्तः ॥

शहजिक्षितीन्द्रसचिवे तस्मिन्पोषयति रामभद्रमखी ।
लम्भितमनःप्रसादो रचयितुमधुनाहमुत्सहे ग्रन्थान् ॥' इति.

अयमेवानन्दरायमखी शहजिमहाराजसोदरस्य शरभोजिमहाराजस्यापि सचिव आसीत्. तथा चानन्दरायमखिकृतेऽथवा वेदकवीश्वरेण विरच्यानन्दरायमखिकृतत्वेन प्रख्यापिते विद्यापरिणयनाटके—

'अत्र तञ्जानगरे देशान्तरादागताः पौरजानपदा जना भगवत्यास्तावदानन्दवल्लयम्बाया महोत्सवदिदृक्षया सङ्घीभूताः ।

सरसकवितानाम्नो हेम्नः कषोपलतां गता
विहरणभुवः षड्दर्शन्या विवेकधनाकराः ।
विदधति तपोलभ्याः सभ्या इमे मम कौतुकं
तदिह हृदयं नाथ्येनैतानुपासितुमीहते ॥ ५ ॥

**पारिपार्श्वकः**—कं पुनः प्रबन्धमवलम्ब्य ।

**सूत्रधारः**—नन्वस्ति मम वशे सकलशमधनजनहृदयानन्दसमुद्धाटकं विद्यापरिणयनं नाम नवीनं नाटकम् ।

**पारिपार्श्वकः**—कस्तस्य प्रबन्धस्य कविः ।

**सूत्रधारः**—विद्वत्कविकल्पतरुरानन्दरायमखी । × × । यस्य किल × ×

नानापूर्वमहाक्रतुप्रणयनैरध्यात्मसंमर्शनैः
कर्मब्रह्मपथप्रचारसविता षड्दर्शनीवल्लभः ।
तातो यस्य किलैकराजवसुधाधौरंधरीगीष्पतिः
क्षोणीपालकिरीटलालितपदः ख्यातो नृसिंहाध्वरी ॥ ८ ॥

अपि च ।

यस्य तातानुजन्मापि यशःपावितदिङ्मुखः ।
त्रिवर्गफलसंपन्नस्त्र्यम्बकामात्यदीक्षितः ॥ ९ ॥ × × ।

श्रुतिस्मृतीतिहासागमतन्त्रादिसिद्धनानाविधसाम्बशिवचरणपरिचरणतदनुसंधाननिरन्तरितनिखिलवासरस्य तदन्तरालपरिमितपरिशिष्टकतिपयमुहूर्तनिर्वर्तनीयचतुरुदधिपरिमुद्रितसकलराज्यतन्त्रस्य शरभमहाराजमन्त्रिशिखामणेरस्य [आनन्दरायमखिनः] जनकसनकसनन्दनप्रमुखाभिनन्दनतदीदृशमहाप्रबन्धनिबन्धनपटिमधौरंधरीयमिति मे महदाश्चर्यम् ।' इति.

अयमेवानन्दरायमखी आश्वलायनगृह्यसूत्रवृत्तेश्च[1] कर्तेति तद्ग्रन्थतः सम्यगवगम्यते. अयं

१. 'आश्वलायनगृह्यसूत्रवृत्ति by आनन्दरायवाजपेययज्वन्. This is most probably the minister of Carabhatulaji Rajah of Tanjore and protector of Vasudeva Dikshit's family and almost certainly not his own production. The date may be put at 1770 A. D.'—Burnell's Catalogue. p. 13. b.

श्रीरामभद्रमखीन्द्रस्य समकालिक इति सुव्यक्तम्. श्रीरामभद्रमखीन्द्रः (सुहर्सन् सल्लास् तिस्सयिन् अल्फ् संवत्सरे=१६९३ खिस्ताब्दे आङ्गीरससंवत्सरे) शहजिमहाराजतः शहजिमहाराजपुरे चत्वारि क्षेत्राणि लब्धवानिति च तद्ग्रामीयदानशासनतः सुस्पष्टम्. एवं सति 'शरभमहाराजामात्येन आनन्दरायमखिना १७५० खिस्ताब्दे विद्यापरिणयनाटकं १७७० खिस्ताब्दे आश्वलायनगृह्यसूत्रवृत्तिं च कृतवता भवितव्यम्' इति कथं डॉक्टर् बर्नेल्नामा हूणसूरिर्व्याहरति इति न ज्ञायते.[१]

श्रीरामभद्रमखिनः समकालिकः शहजिः एकोजिमहाराजस्य तनूजः शहजिरेव. अयं प्राथमिकः शहजिः[२]. तथा च परिभाषावृत्तिव्याख्याने—

---

'Vidyaparinaya Nataka by Anandaraya Makhin, son of Narayana, composed (about 1750) for the Anandavalliamba Mahotsava, which takes place at the Vasishtheswara (S'iva) temple in Karatatangudi, a suburb of Tanjore.'—Burnell's Catalogue. p. 172.

१. See Burnell's Catalogue.

२. तञ्जपुरराज्ञां राज्यारम्भशकः—

| | शा० श० | खि० श० | संवत् | फसली. |
|---|---|---|---|---|
| १ एकोजिः | १५९७ | १६७६ | राक्षस | १०८५ |
| २ शहजिः (१) | १६०५ | १६८४ | रुधिरोद्गारि | १०९३ |
| ३ शरभोजिः (१) | १६३२ | १७११ | विकृति | ११२० |
| ४ तुक्कोजिः | १६५० | १७२९ | कीलक | ११३८ |
| ५ बावासाहेब् | १६५७ | १७३६ | राक्षस | ११४५ |
| ६ मादुश्रीसुजान् बाय् साहेब् | १६५८ | १७३७ | नल | ११४६ |
| ७ शहजिः (२) (काट्टुराजा) | १६६१ | १७४० | सिद्धार्थी | ११४९ |
| ८ प्रतापसिंहः | १६६२ | १७४१ | रौद्रि | ११५० |
| ९ तुलजामहाराजः | १६८६ | १७६५ | दारुण | ११७४ |
| १० अमरसिंहः | १७०९ | १७८८ | प्लवङ्ग | ११९७ |
| ११ शरभोजिः (२) | १७२१ | १८०० | कालयुक्ति | १२०९ |
| १२ शिवाजिः | १७५४ | १८३३ | नन्दन | १२४२ |

१ एकोजिः ... ... ८ वर्षाणि राज्यमकरोत्.
२ शहजिः (१) ... ... २७ ,,
३ शरभोजिः (१)... ... १८ ,,
४ तुक्कोजिः ... ... ७ ,,

'राजा स कश्चिदभवद्भुवि यः पुरन्ध्या दीपाम्बया तनुभृता व्रतसंपदेव ।
विद्योतते स्म विधिरीश्वरयेव वाचां शौरिः श्रियेव गिरिशो गिरिकन्ययेव ॥
मुख्यो[1]ऽसाविति भोसलान्वयभुवां राज्ञामसौ कल्पका-
दन्योऽभीष्टफलप्रदायक इति प्राप्तेऽप्यसौ संयुगे ।
शक्तः केवल एव सत्रिपुनृपानुद्धर्तुमित्युल्लिख-
न्नेकस्य त्रिविधार्थतां बुधजनो ब्रूते यमेकाधिपम् ॥
तस्मादभूद्दशरथादिव पङ्कजाक्षः श्रीशाहभूप इति शीलितधर्मविद्यः ।
यो मार्गणव्रजमुद······लं विमुच्य भूमौ व्यपास्तखरदूषणतां दधाति ॥ × × ।
सतां तेनार्पिते राज्ञा शाहराजपुराभिधे ।
अग्रहारे स्थितिमता रामभद्रेण यज्वना ॥'

श्रीरामभद्रमखिनः शिष्येण वेङ्कटेश्वरकविनापि शाब्दिकविद्वत्प्रमोदे चोच्यते—

'तत्रास्ति शाहनृपतिः सुत्रामसमवैभवः ।
प्रतापतपनस्फूर्तिप्रकाशितदिगन्तरः ॥
एकराजतपःसंपत्पाकभूतनिजोद्भवः ।
उदारचरितश्लाघ्यः स्वदारनिरतः सुधीः ॥'

काकोजिविद्वत्प्रभोस्त्रयस्तनूजाः—(१) नरसिंहाध्वरी, (२) त्र्यम्बकरायमखी, (३) भगवन्तरायश्च. तत्र नरसिंहाध्वरिणस्तनूज आनन्दरायमखी. तत्र नरसिंहाध्वरिणमेव नरसिंहरायमित्यपि परिभाषावृत्तिव्याख्याने श्रीरामभद्रमखीन्द्रः कथयति. नरसिंहरायमखी एकोजिराजस्य मन्त्री.

'तातो यस्य किलैकराजवसुधाधौरंधरीगीष्पतिः
क्षोणीपालकिरीटलालितपदः ख्यातो नृसिंहाध्वरी ।'

इति विद्यापरिणयनाटके. (१) नरसिङ्गराव् पेष्वा, (२) त्र्यम्बकराव् पेष्वा, (३) आनन्दराव् पेष्वा, इति तेषां व्यावहारिकनामानि दृश्यन्ते. काकोजिविदुषो गङ्गाधराध्वरीत्यपरनाम.

---

| | | | |
|---|---|---|---|
| ५ बावासाहेब् ... | ... | १ | वर्षाणि राज्यमकरोत्. |
| ६ मादुश्रीसुजान् बाय् साहेब् | | ३ | ,, |
| ७ शहजिः (२) | ... | १ | ,, |
| ८ प्रतापसिंहः ... | ... | २४ | ,, |
| ९ तुलजामहाराजः | ... | २३ | ,, |
| १० अमरसिंहः ... | ... | १२ | ,, |
| ११ शरभोजिः (२) | ... | ३३ व. ८ मा. | ,, |
| १२ शिवाजिः ... | ... | २३ व. ७ मा. | ,, |

१. 'एको मुख्यान्यकेवलाः' इत्यमरः.

तथा च—

गङ्गाधराध्वरिसुतो नरसिंहसूरेर्यख्यम्बकाध्वरिमणेश्च सुधीः कनीयान्।
काव्येऽमुना विरचिते भगवन्तनाम्ना सर्गः शुभोऽजनि मुकुन्दविलासनाम्नि॥'

जानकीपरिणयनाटके 'यस्यानुग्रहदृष्टिमर्पयति च श्रीबालकृष्णो गुरुः' इति वर्तते. अद्भुतदर्पणनाटके च 'तन्निर्यन्त्रणबालकृष्णभगवत्पादप्रसादोन्मिषत्प्राचण्ड्यः कविमण्डलेश्वरयशोगुम्फः क्व वा जृम्भताम्' इति च दृश्यते. अयं बालकृष्णभगवत्पादः कर्ता 'सिद्धान्तसिद्धाञ्जन'नामधेयस्य कस्यचन वेदान्तशास्त्रग्रन्थस्येतिमात्रमिदानीं ज्ञायते. स त्रिशिरपुरस्य (=Trichinapoly-Town) समीपवर्तिनि 'नाचिकुरिचि'नाम्नि अग्रहारे चिरमुवास, तत्रैव तस्य निर्याणोऽप्यासीदिति श्रूयते. सिद्धान्तसिद्धाञ्जनस्य रत्नतूलिकानाम व्याख्या. सा च श्रीरामभद्रमखीन्द्रेण सह शहजिमहाराजपुरं प्रतिगृहीतवता भास्करदीक्षितेन प्रणीता.

शृङ्गारतिलकभाणे श्रीरामभद्रमखीन्द्रः स्वस्य चतुर्वेदयज्वेन्द्रस्य वंशे समुत्पत्तिमाह. अयं चतुर्वेदयज्वेन्द्रः पदमञ्जरीव्याख्यानस्य मञ्जरीमकरन्दस्य कर्तुः रङ्गनाथयज्वनः पितुः पितृव्यः. तत्र चारम्भे एवं संदृश्यते—

'श्रीरामचन्द्रं जनकात्मजापतिं सलक्ष्मणं राक्षसमोक्षकारणम्।
नमामि वाचा मनसा च मूर्ध्ना निर्विघ्नसिद्ध्यै कुलदैवतं नः॥
यो नारायणदीक्षितस्य नप्ता नल्लादीक्षितसूरिणस्तु पौत्रः।
श्रीनारायणदीक्षितेन्द्रपुत्रो व्याख्याम्येषां(?) हि रङ्गनाथयज्वा॥
मातामहो यस्य च शब्दपारभाष्यार्थवेत्ता खलु मातुलश्च।
अपेतलज्जेन हि तेन केनचित्प्रकाश्यतेऽसौ पदमञ्जरी खरा॥
श्रीचोलदेशे सुधियो बृहस्पतेस्तुल्यास्त्रयः पञ्च गृहे गृहे बुधाः।
वसन्ति तेषां धुरि मत्कृतिस्तथा विभाति कीटो रविसंनिधौ यथा॥
जगन्मण्डलविख्यातो यश्चतुर्वेददीक्षितः।
अस्मत्पितृपितृव्यश्च वन्दे तच्चरणाम्बुजम्॥' इति.

शृङ्गारतिलकभाणे दृश्यमानो नीलकण्ठमखी अप्पयदीक्षितस्य भ्रातुराचादीक्षितस्य पौत्रः[1]. नारायणदीक्षितस्य भूमिदेव्याश्च पुत्रः. कुशकुमुद्वतीयनाटकस्य निर्मातुरतिरात्रयज्वनो ज्यायान्भ्राता. नीलकण्ठदीक्षितस्य तृतीयनन्दनो गीर्वाणेन्द्रदीक्षितः. श्रीनीलकण्ठदीक्षितो मधुरानगर्यां स्थितः. तेन कृता ग्रन्था:—(१) कैयटव्याख्यानम्, (२) शिवतत्त्व-

१. नीलकण्ठदीक्षितस्य परम्परा—

**आचार्यदीक्षितः** { 'आ सेतुबन्धतटमा च तुषारशैल-
माचार्यदीक्षित इति प्रथिताभिमानम्।
अद्वैतचिन्मयमहाम्बुधिमग्नभाव-
मस्मत्पितामहमशेषगुरुं प्रपद्ये॥'

रहस्यम्, (३) शिवलीलार्णवमहाकाव्यम्, (४) नलचरितनाटकम्, (५) नीलकण्ठविजयाख्यचम्पूकाव्यम्, (६) कलिविडम्बनम्, (७) सभारञ्जनशतकम्, (८) वैराग्यशतकम्, (९) शान्तिविलासः, (१०) अन्यापदेशशतकम्, (११) आनन्दसागरस्तवः, (१२) गङ्गावतरणकाव्यम्. तस्य तृतीयपुत्रेण गीर्वाणेन्द्रेण कृतः शृङ्गारकोशो नाम भाणश्चेदानीं तत्र तत्र विद्यमानो दृश्यते. कुशकुमुद्वतीयनाटके—'एष खलु द्वितीयशंकररूपाणां अप्पयदीक्षितानां नप्ता नलचरितनाटकप्रबद्धा' इति नीलकण्ठमखिनं अप्पयदीक्षितस्य नप्तारमाह कविः. अयं नीलकण्ठमखी ४७३८[1] वत्सरेषु गतेषु कलौ नीलकण्ठविजयं कृतवान्.

कुशकुमुद्वतीयनाटके—

'विद्वद्वादविवादकालयुगपद्विस्फूर्त्यहंपूर्विका-
निर्यद्युक्तिसहस्रदर्शितनिजाहीन्द्रावताराकृतिः ।
कर्तुं कारयितुं तथा रसयितुं काव्यानि नव्यान्यलं
भूष्णुर्भाति सभासभाजितमतिः श्रीनीलकण्ठाध्वरी ॥ × × ।

अयं किल भरद्वाजकुलपारावारपारिजातः सकलसाम्राज्यसिंहासनाधिपतिः तत्रभवतः श्रीमतो नारायणाध्वरिणस्तपःपरिपाकः कर्ता काव्यानाम्, व्याकर्ता तन्त्राणाम्, आहर्ता क्रतूनाम्, व्याहर्ता सकलनृपसभेषु, दिगन्तरविश्रान्तकीर्तिरपारमहिमा मानवाकृतिः साक्षादेव दाक्षायणीवल्लभः श्रीकण्ठमतसर्वस्ववेदी श्रीनीलकण्ठाध्वरी ॥ × × । एष खलु द्वितीयशंकररूपाणां अप्पयदीक्षितानां नप्ता नलचरितनाटकप्रबद्धा ।' इति वर्तते.

---

(तत्सुतः)
**रङ्गराजमखी**

{ 'यं ब्रह्मनिश्चितधियः प्रवदन्ति साक्षा-
त्वड्दर्शनाद्यखिलदर्शनपारभाजम् ।
तं सर्ववेदसमशेषबुधाद्रिराजं
श्रीरङ्गराजमखिनं पितरं प्रपद्ये ॥'
इत्यप्पयदीक्षितप्रणीतहरिवंशसारचरितव्याख्यायाम्.

(तत्सुतः)
**अप्पयदीक्षितः**

(तस्य कनीयान्भ्राता)
**आच्चादीक्षितः** (आचार्यदीक्षितः)

(तत्सुतः)
**नारायणदीक्षितः**

(तस्य पुत्रपञ्चकाद्द्वितीयः पुत्रः)
**नीलकण्ठदीक्षितः**

१. 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु । कल्यब्देषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥' इति नीलकण्ठविजये.

शृङ्गारकोशभाणे—

'अस्त्यस्तोकगुणो हिमाद्रिशिखरोत्सङ्गापतज्जाह्नवी
साहंकारतरङ्गसङ्गसहजश्रीहारिसूक्तिक्रमः ।
किंचोन्मूलयितुं मनश्च सुदृढीकर्तुं कलासु प्रभुः
सर्वज्ञो हरिदन्तविश्रुतयशाः श्रीनीलकण्ठाध्वरी ॥

अपि च ।

यस्मिन्क्षोणिभुजां सभासु विदुषामग्रेसरे जातुचि-
त्स्वातन्त्र्यं विविधं विवृण्वति निजं सर्वासु विद्यास्वपि ।
जायन्ते गगनप्रचोदितदृशः स्तव्योपलब्धिक्रमाः
स्वेदाम्भःकणसिक्तसर्वतनवो दीनाः प्रतिद्वन्द्विनः ॥

तस्य भरद्वाजकुलजलधिकौस्तुभस्य कैयटव्याख्यान-शिवतत्त्वरहस्याद्यनेकप्रबन्धनिर्मातुरद्वैतविद्यागुरोर्भगवत्याः परदेवताया एव पुरुषावतारस्य पवित्रकीर्तेर्नीलकण्ठमखिनस्तृतीयनन्दनेन तदीयचरणारविन्दपरिचरणलब्धनिखिलविद्येन तत्पुत्रतानुगुणसाहितिकेन गीर्वाणेन्द्रेणाभिनवनिवर्तितः शृङ्गारकोशो नाम भाणः ।' इति वर्तते.

शिवलीलार्णवे महाकाव्ये—

'लीलाचतुःषष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः ।
श्रीनीलकण्ठे मयि कर्णजाह(?)मानीय मीनाक्षि चिरं दयेथाः ॥
हालास्येशितुरीशितुर्यदि सखे लीलासु शुश्रूषसे
तत्सर्वागमगुप्तमस्य यदि वा तत्त्वं विजिज्ञाससे ।
पारं वाथ दिदृक्षसे यदि परं काव्यागमस्रोतसां
तत्कर्णे कुरु नीलकण्ठमखिनो वाचं शिवैकाश्रयाम् ॥'

सभारञ्जनशतके—

'निर्मितं शतकं साग्रं नीलकण्ठेन यज्वना ।
सभारञ्जनमेतेन साधयन्तु मनीषिणः ॥ १०५ ॥'

कलिविडम्बने—

'कविना नीलकण्ठेन कलेरेतद्विडम्बनम् ।
रचितं विदुषां प्रीत्यै राजस्थानानुमोदनम् ॥ १०२ ॥'

आनन्दसागरस्तवे—

'त्वय्यर्पितं प्रथममप्पययज्वनैव स्वात्मार्पणं विदधता स्वकुलं समस्तम् ।
का त्वं महेशि कुलदासमुपेक्षितुं मां को वानुपासितुमहं कुलदेवतां त्वाम् ॥ ४३ ॥'

इति कविः स्वकृतत्वं सम्यग्व्यञ्जयति.

अयं नीलकण्ठमखी श्रीकृष्णानन्दयोगीन्द्रस्यान्तेवासी चेति दृश्यते.

शिवलीलार्णवे—

'श्रीकृष्णानन्दयोगीन्द्रचरणाम्बुरुहद्वयम्।
धर्मार्थकाममोक्षाणां निदानं नित्यमाश्रये॥'

गङ्गावतरणे—

'आसीदाचादीक्षितस्य पुत्रो नारायणाध्वरी॥
जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः।
गर्भदासा महेशस्य कवयश्च विपश्चितः॥
तेषामहं द्वितीयोऽस्मि भूमिदेवीतनूभुवाम्।
नीलकण्ठ इति ख्यातिं नीतः शंभोः प्रसादतः॥
वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः।
श्रीवेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते॥'

नीलकण्ठमखिनो गुरुः वार्तिकाभरणग्रन्थस्य कर्ता गोविन्ददीक्षितस्य पुत्रः साहित्यरत्नाकरग्रन्थस्य कर्तुर्यज्ञनारायणदीक्षितस्य कनीयान्भ्राता वेङ्कटेश्वरमखी.

श्रीरामभद्रमखीन्द्रः जानकीपरिणयनाटके कोण्डाज्यौतिषिकेनाप्यात्मानं संमानितं वदति. अयं कोण्डाज्यौतिषिकः वैयाकरणभूषणस्य कर्ता काण्डभट्ट इत्यामनन्ति. तद्विमर्शनीयम्.

टी. एस्. कुप्पूस्वामी शास्त्री.

# काव्यमाला।

श्रीदुर्वाससा विरचितं

## श्रीललितास्तवरत्नम्[1]।

वन्दे गजेन्द्रवदनं वामाङ्कारूढवल्लभाश्लिष्टम्।
कुङ्कुमपरागशोणं कुवलयिनीजारकोरकापीडम्॥ १॥
स जयति सुवर्णशैलः सकलजगच्चक्रसंघटितमूर्तिः।
काञ्चननिकुञ्जवाटीकन्दलदमरीप्रपञ्चसंगीतः॥ २॥
हरिहयनैर्ऋतमारुतहरितामन्तेष्ववस्थितं तस्य।
विनुमः सानुत्रितयं विधिहरिगौरीशविष्टपाधारम्॥ ३॥
मध्ये पुनर्मनोहररत्नरुचिस्तबकरञ्जितदिगन्तम्।
उपरि चतुःशतयोजनमुत्तुङ्गं शृङ्गपुंगवमुपासे॥ ४॥
तत्र चतुःशतयोजनपरिणाहं देवशिल्पिना रचितम्।
नानासालमनोज्ञं नमाम्यहं नगरमादिविद्यायाः॥ ५॥
प्रथमं सहस्रपूर्वकषट्शतसंख्याकयोजनं परितः।
वलयीकृतस्वगात्रं वरणं शरणं व्रजाम्ययोरूपम्॥ ६॥
तस्योत्तरे समीरणयोजनदूरे तरङ्गितच्छायः।
घटयतु मुदं द्वितीयो घण्टास्वनसारनिर्मितः सालः॥ ७॥
उभयोरन्तरसीमन्युद्दामभ्रमररञ्जितोदारम्।
उपवनमुपास्महे वयमूरीकृतमन्दमारुतस्यन्दम्॥ ८॥

---

१. अस्य श्रीललितास्तवरत्नस्य पुस्तकद्वयमासादितम्. तत्रैकं क-चिह्नितं जयपुरराजगुरुश्रीभट्टश्रीनारायणपर्वणीकराणाम्, अपरं च ख-चिह्नितं चातुर्वैदिकगौडरामचन्द्रतनूजनाथूनारायणशर्मणाम्.

आलिङ्ग्य भद्रकालीमासीनस्तत्र हरिशिलाश्यामाम् ।
मनसि महाकालो मे विहरतु मधुपानविभ्रमन्नेत्रः ॥ ९ ॥
तार्तीयीको वरणस्तस्योत्तरसीम्नि वातयोजनतः ।
ताम्रेण रचितमूर्तिस्तनुतामाचन्द्रतारकं भद्रम् ॥ १० ॥
मध्ये तयोश्च मणिमयपल्लवशाखाप्रसूनपक्ष्मलिताम् ।
कल्पानोकहवाटीं कलये मकरन्दपङ्किलाबालाम् ॥ ११ ॥
तत्र मधुमाधवश्रीतरुणीभ्यां तरलदृक्चकोराभ्याम् ।
आलिङ्गितोऽवतान्मामनिशं प्रथमर्तुरात्तपुष्पास्त्रः ॥ १२ ॥
नमत तदुत्तरभागे नाकिपथोल्लङ्घिशृङ्गसंघातम् ।
सीसाकृतिं तुरीयं सितकिरणालोकनिर्मलं सालम् ॥ १३ ॥
सालद्वयान्तराले सरलालिकपोतचाटुसुभगायाम्[1] ।
संतानवाटिकायां सक्तं चेतोऽस्तु सततमस्माकम् ॥ १४ ॥
तत्र तपनातिरूक्षः साम्राज्ञीचरणसान्द्रितस्वान्तः ।
शुक्रशुचिश्रीसहितो ग्रीष्मर्तुर्दिशतु कीर्तिमाकल्पम् ॥ १५ ॥
उत्तरसीमनि तस्योन्नतशिखरोत्कम्पिहाटकपताकः ।
प्रकटयतु पञ्चमो नः प्राकारः कुशलमारकूटमयः ॥ १६ ॥
प्राकारयोश्च मध्ये पल्लवितान्यभृतपञ्चमोन्मेषा ।
हरिचन्दनद्रुवाटी हरतादामूलमस्मदनुतापम् ॥ १७ ॥
तत्र नभश्रीमुख्यैस्तरुणीवर्गैः समन्वितः परितः ।
वज्राट्टहासमुखरो वाञ्छापूर्तिं तनोतु वर्षर्तुः ॥ १८ ॥
मारुतयोजनदूरे महनीयस्तस्य चोत्तरे भागे ।
भद्रं कृषीष्ट षष्ठः प्राकारः पञ्चलोहधातुमयः ॥ १९ ॥
अनयोर्मध्ये संततमङ्कूरद्दिव्यकुसुमगन्धायाम् ।
मन्दारवाटिकायां मानसमङ्गीकरोतु मे विहृतिम् ॥ २० ॥
तस्यामिवोर्जलक्ष्मीतरुणीभ्यां शरदृतुः सदा सहितः ।
अभ्यर्चयन्स जीयादम्बामामोदमेदुरैः कुसुमैः ॥ २१ ॥

---

१. 'सरलानिलपीत' क.

तस्यर्षिसंख्ययोजनदूरे देदीप्यमानशृङ्गौघः ।
कलधौतकलितमूर्तिः कल्याणं दिशतु सप्तमः सालः ॥ २२ ॥
मध्ये तयोर्मरुत्पथलङ्घितविटपाग्रविरुतकलकण्ठा ।
श्रीपारिजातवाटी श्रियमनिशं दिशतु शीतलोद्देशा ॥ २३ ॥
तस्यामतिप्रियाभ्यां सह खेलन्सहसहस्यलक्ष्मीभ्याम् ।
सामन्तो झषकेतोर्हेमन्तो भवतु हेमवृद्धयै नः ॥ २४ ॥
उत्तरतस्तस्य महानुद्भटहुतभुक्शिखारुणमयूखः ।
तपनीयखण्डरचितस्तनुतादायुष्यमष्टमो वरणः ॥ २५ ॥
कादम्बविपिनवाटीमनयोर्मध्यभुवि कल्पितावासाम् ।
कलयामि सूनकोरककन्दलितामोदतुन्दिलसमीराम् ॥ २६ ॥
तस्यामतिशिशिराकृतिरासीनस्तपतपस्यलक्ष्मीभ्याम् ।
शिवमनिशं कुरुतान्मे शिशिरर्तुः सततशीतलदिगन्तः ॥ २७ ॥
तस्यां कदम्बवाट्यां तत्प्रसवामोदमिलितमधुगन्धम् ।
सप्तावरणमनोज्ञं शरणं समुपैमि मन्त्रिणीशरणम् ॥ २८ ॥
तत्रालये विशाले तपनीयारचिततरलसोपाने ।
माणिक्यमण्डपान्तर्[1]महिते सिंहासने मणिखचिते ॥ २९ ॥
बिन्दुत्रिपञ्चकोणद्विपनृपवसुवेददलकुरेखाढ्ये ।
चक्रे सदा निविष्टां षष्ट्यष्टत्रिंशदक्षरेशानीम् ॥ ३० ॥
तापिञ्छमेचकाभां तालीदलघटितकर्णताटङ्काम् ।
ताम्बूलपूरितमुखीं ताम्राधरबिम्बदृष्टदरहासाम् ॥ ३१ ॥
कुङ्कुमपङ्किलदेहां कुवलयजीवातुशावकवतंसाम् ।
कोकनदशोणचरणां कोकिलनिक्वाणकोमलालापाम् ॥ ३२ ॥
[2]वामाङ्गगलितचूलीं वनमाल्यकदम्बमालिकाभरणाम् ।
मुक्तालल‍न्तिकाञ्चितमुग्धालिकमिलितचित्रकोदाराम् ॥ ३३ ॥
करविधृतकीरशावककलनिनदव्यक्तनिखिलनिगमार्थाम् ।
वामकुचसङ्गिवीणावादनसौख्यार्धमीलिताक्षियुगाम् ॥ ३४ ॥

---

१. 'महति सुसिंहासने' क. २. 'वामांसललित' क.

आपाटलांशुकधरामादिरसोन्मेषवासितकटाक्षाम् ।
आम्नायसारगुलिकामाद्यां संगीतमातृकां वन्दे ॥ ३५ ॥
तस्य च सुवर्णसालस्योत्तरतस्तरुणकुङ्कुमच्छायः ।
शमयतु मम संतापं सालो नवमः स पुष्परागमयः ॥ ३६ ॥
अनयोरन्तरवसुधाः प्रणुमः प्रत्यग्रपुष्परागमयीः ।
सिंहासनेश्वरीमनुचिन्तननिस्तन्द्रसिद्धनीरन्ध्राः ॥ ३७ ॥
तत्सालोत्तरदेशे तरुणजपाकिरणधोरणीशोणः ।
प्रशमयतु पद्मरागप्राकारो मम पराभवं दशमः ॥ ३८ ॥
अन्तरभूकृतवासाननयोरपनीतचित्तवैमत्यान् ।
चक्रेशीपदभक्तांश्चारणवर्गानहर्निशं कलये ॥ ३९ ॥
सारङ्गवाहयोजनदूरेऽसंघटितकेतनस्तस्य ।
गोमेदकेन रचितो गोपायतु मां समुन्नतः सालः ॥ ४० ॥
वप्रद्वयान्तरोर्व्यां बटुकैर्विविधैश्च योगिनीवृन्दैः ।
सततं समर्चितायाः संकर्षिण्याः प्रणौमि चरणाब्जम् ॥ ४१ ॥
तापसयोजनदूरे तस्य समुत्तुङ्गगोपुरोपेतः ।
वाञ्छापूर्त्यै भवताद्वज्रमणीनिकरनिर्मितो वप्रः ॥ ४२ ॥
वरणद्वितयान्तरतो वासजुषो विहितमधुरसास्वादाः ।
रम्भादिविबुधवेश्या रचयन्तु महान्तमस्मदानन्दम् ॥ ४३ ॥
तत्र सदा प्रवहन्ती तटिनी वज्राभिधा चिरं जीयात् ।
चटुलोर्मिजालनृत्यत्कलहंसीकुलकलक्वणितपुष्टा ॥ ४४ ॥
रोधसि तस्या रुचिरे वज्रेशी जयति वज्रभूषाढ्या ।
वज्रप्रदानतोषितवज्रिमुखत्रिदशविनुतचारित्रा ॥ ४५ ॥
तस्योदीच्यां हरिति स्तबकितसुषमावलीढवियदन्तः ।
वैडूर्यरत्नरचितो वैमल्यं दिशतु चेतसो वरणः ॥ ४६ ॥
अधिमध्यमेतयोः पुनरम्बाचरणावलम्बितस्वान्ताम् ।
कर्कोटकादिनागान्कलयामः किं च बलिमुखान्दनुजान् ॥ ४७ ॥

गन्धवहसंख्ययोजनदूरे गगनोर्ध्वजाङ्घिकस्तस्य ।
वासवमणिप्रणीतो वरणो बहलयतु वैदुषीं विशदाम् ॥ ४८ ॥
मध्यक्षोण्यामनयोर्महेन्द्रनीलात्मकानि च सरांसि ।
शातोदरीसहायान्भूपालानपि पुनः पुनः प्रणुमः ॥ ४९ ॥
आशुगयोजनदूरे तस्योर्ध्वं कान्तिधवलितदिगन्तः ।
मुक्ताविरचितगात्रो मुहुरस्माकं मुदे भवतु वप्रः ॥ ५० ॥
आवृत्त्योरधिमध्यं पूर्वस्यां दिशि पुरंदरः श्रीमान् ।
अभ्रमुविटाधिरूढो विभ्रममस्माकमनिशमातनुतात् ॥ ५१ ॥
तत्कोणे व्यजनस्रुक्तोमरपात्रस्रुवान्नशक्तिधरः ।
स्वाहास्वधासमेतः सुखयतु मां हव्यवाहनः सुचिरम् ॥ ५२ ॥
दक्षिणदिगन्तराले दण्डधरो नीलनीरदच्छायः ।
त्रिपुरापदाब्जभक्तस्तिरयतु मम निखिलमंहसां निकरम् ॥ ५३ ॥
तस्यैव पश्चिमायां दिशि दलितेन्दीवरप्रभाश्यामः ।
खेटासियष्टिधारी खेदानपनयतु यातुधानो मे ॥ ५४ ॥
तस्या उत्तरदेशे[१] धवलाङ्गो विपुलझषवरारूढः ।
पाशायुधात्तपाणिः पाशी विदलयतु पाशजालानि ॥ ५५ ॥
वन्दे तदुत्तरहरित्कोणे वायुं चमूरुवरवाहम् ।
कोरकिततत्त्वबोधान्गोरक्षप्रमुखयोगिनोऽपि मुहुः ॥ ५६ ॥
तरुणीरिडाप्रधानास्तिस्रो वातस्य तस्य कृतवासाः ।
प्रत्यग्रकापिशायनपानपरिभ्रान्तलोचनाः कलये ॥ ५७ ॥
तल्लोकपूर्वभागे धनदं ध्यायामि शेवधिकुलेशम् ।
अपि माणिभद्रमुख्यानम्बाचरणावलम्बिनो यक्षान् ॥ ५८ ॥
तस्यैव पूर्वसीमनि तपनीयारचितगोपुरे नगरे ।
कात्यायनीसहायं कलये शीतांशुखण्डचूडालम् ॥ ५९ ॥
तत्पुरषोडशवरणस्थलभाजस्तरुणचन्द्रचूडालान् ।
रुद्राध्यायोऽपठितान्रुद्राणीसहचरान्भजे रुद्रान् ॥ ६० ॥

---

१. 'मुत्तरभागे' क.

पवमानसंख्ययोजनदूरे बालतृणमेचकस्तस्य ।
सालो मरकतरचितः संपदमचलां श्रियं च पुष्णातु ॥ ६१ ॥
आवृतियुग्मान्तरतो हरितमणीनिवहमेचके देशे ।
हाटकतालीविपिनं [1]हालाघटघटितविटपमाकलये ॥ ६२ ॥
तत्रैव मन्त्रिणीगृहपरिणाहं तरलकेतनं सदनम् ।
मरकतसौधमनोज्ञं दद्यादायूंषि दण्डनाथायाः ॥ ६३ ॥
सदने तत्र हरिन्मणिसंघटिते मण्डपे शतस्तम्भे ।
कार्तस्वरमयपीठे कनकमयाम्बुरुहकर्णिकामध्ये ॥ ६४ ॥
बिन्दुत्रिकोणवर्तुलषडस्रवृत्तद्वयान्विते चक्रे ।
संचारिणी दशोत्तरशतार्णमनुराजकमलकलहंसी ॥ ६५ ॥
[2]कोलवदना कुशेशयनयना कोकारिमण्डितशिखण्डा ।
संतप्तकाञ्चनाभा संध्यारुणचैलसंवृतनितम्बा ॥ ६६ ॥
हलमुसलशङ्खचक्राङ्कुशपाशाभयवरस्फुरितहस्ता ।
कूलंकषानुकम्पा कुङ्कुमजम्बालितस्तनाभोगा ॥ ६७ ॥
धूर्तानामतिदूरा वार्ताशेषावलग्नकमनीया ।
आर्तालिशुभदात्री वार्ताली भवतु वाञ्छितार्थाय ॥ ६८ ॥
तस्याः परितो देवीः स्वप्नेश्युन्मत्तभैरवीमुख्याः ।
प्रणमत जम्भिन्याद्या भैरववर्गांश्च हेतुकप्रमुखान् ॥ ६९ ॥
पूर्वोक्तसंख्ययोजनदूरे पूयांशुपाटलस्तस्य ।
विद्रावयतु मदार्तिं विद्रुमसालो विशङ्कटद्वारः ॥ ७० ॥
आवरणयोरहर्निशमन्तरभूमौ प्रकाशशालिन्याम् ।
आसीनमम्बुजासनमभिनवसिन्दूरगौरमहमीडे ॥ ७१ ॥
वरणस्य तस्य मारुतयोजनतो विपुलगोपुरद्वारः ।
सालो नानारत्नैः संघटिताङ्गः कृषीष्ट मदभीष्टम् ॥ ७२ ॥
अन्तरकक्ष्यामनयोरविरलशोभापिचण्डिलोद्देशाम् ।
माणिक्यमण्डपाख्यां महतीमधिहृदयमनिशमाकलये ॥ ७३ ॥

१. 'हालामद' क. २. 'कोमलव' क.

